वद्धुपेहि महोत्सवं विदग्ध्याः
सुहृदो मानय दुर्हृदो हतास्ते।
चिरकालमनोरथं तदेत-
न्महय भ्रातृविवाहमङ्गलं ते ॥ ६९ ॥

इति गिरमुपकर्ण्य वर्ण्यमानां
सपदि विवर्णतरौ बभूवतुस्तौ।
शशिरचिकुमुदाकराभिवोभा-
वुषसि सुता सचिवस्य माधवश्च ॥ ७० ॥

अयि शशिमुखि दिष्ट्या वर्धसे भ्रातृवृद्ध्या
नियतमिति वदन्तीं लिङ्गिनीं वन्दमाना।
अधिकमभिवहन्ती नन्दथुं[20] नन्दनस्य
प्रसभमवरजा सा मालतीमालिलिङ्गे ॥ ७१ ॥

मकरन्दमिव स्फुटारविन्दा-
न्मकरन्दान्मदयन्तिका मराली।
परिलुण्ठ्य मनः सपक्षपातात्
प्रियसख्या सह मन्दिरं प्रतस्थे ॥ ७२ ॥

ततो गतायां मदयन्तिकायां
भूरिव्यथां भूरिवसोः कुमारीम्।
म्लानं तथा माधवमप्यवेक्ष्य
कामन्दकी सानुनयं बभाषे ॥ ७३ ॥

20 नन्दथुर्न°

कन्यादाने न[21] हि नृपतयो लोकवृत्त्या प्रमाणं
मन्वादीनामपि न वचनं मन्महे तत्र मूलम् ।
व्याजोद्गीर्णा नियतमनृता मन्त्रिणश्चापि वाणी
तत् किं मोहं भजसि मयि च त्वच्छिवेऽकोपमायाम् ॥ ७४ ॥

इत्यमाश्वास्य वचनैर्मालतीमाश्वासिता ।
आदाय मालतीं दीनामगात् कामन्दकी गृहात् ॥ ७५ ॥

श्रुत्वा तद्वचनं निराशहृदयो मिथ्यासमाश्वासनं
कामित्थात् पुनराशया क्वचित्त काक्षन्नुपायान्तरम् ।
एकाकी मकरन्दमप्यसुसमं मुक्त्वा छलान्माधवः
चार्यं साहसिकैर्नृमांसपणनं कर्तुं श्मशानं ययौ ॥ ७६ ॥

करकलितकृपाणं कुन्तलैरूर्ध्वबद्धै
र्दृढपरिकरबन्धं श्लिष्टचण्डातकश्री ।
दधदितरकरेऽसौ शस्त्रपूतं नृमांसं
व्यरचदलमुपेतो वीररौद्राविवैक्यम् ॥ ७७ ॥

निर्व्यूढे रजनीमुखे तमसि च प्रौढेऽवगाढे दिशो
मेदस्फीतरसाञ्चितं हुतभुजामर्चिर्भिरभ्यर्चितम् ।
वेतालीकरतालिकापटुनटद्भूतादिगीताकुलं
कीर्णं जीर्णपिशाचिकाभिरमुना प्रापे श्मशानं पुरं ॥ ७८ ॥

---

21 दान

सीत्कारैर्भैरवाणां[22] दिशि दिशि हृषितैर्व्याप्नुवानां वृकाणां[23]
फूत्कारैः फेरवाणामतिकटुरटितैरत्कटानां किटीनाम् ।
वेतालीनां च केलीकलितकिलकिलासंकुलैर्हस्ततालैः[24]–
राकीर्णं[25] सर्वतस्तत् क्षणमिव रुरुचे शब्दतन्मात्रमात्रम् ॥ ७९ ॥

कोलाहले तत्र शमं प्रयाते शवामिषास्वादविवादमूले ।
सघोषयामास कृताभिसन्धिः श्मशाननिष्ठान् प्रति भूतवर्गान् ॥८०॥

अशस्त्रपूतनिर्व्याजपुरुषाङ्गोपकल्पितम्[26] ।
विक्रीयते महामांसं गृह्यतां गृह्यतामिति ॥ ८१ ॥

आघोषणामसकृदेवमुदीर्यमाणा–
माम्नायपूतवपुषा द्विजपुङ्गवेन ।
आरण्यं तूर्णमुपजग्मुरमुष्य पश्चा–
दाथर्वणीं श्रुतिमिव स्वयमासुरौघाः ॥८२॥

आचारैर्विविधैरलौकिकविशिरस्वेष्टितैश्चेष्टितै–
रत्यर्थविकटैर्विहारघटनाकोलाहलैर्लोहलैः[27] ।
आनन्दं जुगुप्सितैरनुचितारम्भैश्च सम्भोगकै–
स्तेषामप्य चिरं जहास दयिताविश्लेषदीनोऽपि सन् ॥ ८३ ॥

---

22 सा त्कारैः रवाणां दिशि°　　23 वृकानां
24 कलिकिला　　25 तालैः सर्व°
26 अशस्त्रपूतमव्याजं is the reading in printed eds of the मा म
27 °लाहलैः But लोहलैः appears to be the correct reading it rhymes well with कोलाहलैः of क्षीरस्वामी—उद्दं च यनाशी—अमरक with क्षीरस्वामी s Com Poona Oriental Series no 43 p 244

निःसत्त्वानुपहस्य पूतनगणान् सत्रासमन्तर्हितान्
देवो रुद्र इव स्वयं पितृवने वंभ्रम्यमाणः अमुः ।
निर्विण्णो नितरां करङ्कपटलीरङ्गत्तरङ्गाकुलां
सीमानं पितृकाननस्य कुणपैर्दुष्टां[28] नदीं दृष्टवान् ॥ ८४ ॥

प्राकारेण हिरण्मयेन कलितं माणिक्यरोचिश्छटा-
वालभ्रभ्रमरीचिवीचिपटलस्पष्टस्फुरद्गोपुरम् ।
दूरादायतनं दिवेव ददृशे वीरेण घोरोज्ज्वलं
यत्रास्ते विविधोपहाररसिका काली करालाह्वया ॥ ८५ ॥

अनुसन्ध्यमघोरघण्टनाम्नो
नृकपालाभरणस्य गुरुपशिष्या ।
उपगच्छति मन्त्रसाधनेच्छो-
र्वचसा तस्य कपालकुण्डलाख्या ॥ ८६ ॥

श्रीपर्वतादुपगताविव निर्भयौ तौ
जीवात्मकैर्बलिभिरर्चयतश्च चण्डीम् ।
इत्थं पुरा श्रुतवतः पुरलोकवार्तां
तत् स्थानमेतदिति धीः प्रथतेऽस्य यावत् ॥ ८७ ॥

तावच्च हा कठिन तात नरेन्द्रबुद्धे-
राराधनोपकरणं भवतो जनोऽयम् ।
वध्या विपद्यत इति श्रवसी तुतोद
सन्तप्तसूचिरिव काचिदरुन्तुदा वाक् ॥ ८८ ॥

---

28. °दृष्टनदीं.

श्रुत्वा च किं न्विदमिति श्रुतपूर्वनाम-
सवादत कलुषबुद्धिरनिष्टशङ्की ।
गन्तु ततोमुपमियेष न च क्षमोऽभूत्
सस्तम्भकम्पितगति सलिलाविलाक्ष ॥ ८९ ॥

गत्वा हठात् पुनरपश्यदघोरघण्ट
देव्यर्चनोपकरण ददतीं च शिष्याम् ।
तन्मन्त्रसाधननिधावुपयाचित प्राक्[29]
स्व जीवित च पुरत कृतवध्यचिह्नम् ॥ ९० ॥

बहलघुसृणलिप्ता बद्धबन्धूकमालया
अलिकनिहितलाक्षाबिन्दुमारक्तवस्त्राम् ।
वलयदरिकरस्था बन्धुविश्लेषदु स्था[30]
बलिपशुपदमाप्ता प्रैक्षत प्राणनाथाम् ॥ ९१ ॥

अथ तामन्धुण्डचण्डमुण्डा
कुसुमाद्यैरवतोष्य च स्तवै स्वै ।
अयि दास मनोगत तवेति
त्वरितानूचतुराकुला कुमारीम् ॥ ९२ ॥

प्रिय माधव ! मन्दभाग्ययाऽनया
न मया [31] त्व महित करार्पणात् ।
परलोकगताप्यह त्वया
परिचिन्त्येति रुरोद भामिनी ॥ ९३ ॥

---

29 °दुपयाचिता प्राक
30 दुस्था
31 अनया

अथ मालतीं कुसुमचारुरुचिं
विनिहन्तुमाशु सुकुमारतनुम् ।
असिमाददे ज्वलितमस्तघृणः
कठिनो निदाघनवघर्मरुचिम् ॥ ९४ ॥

सावेगमद्भुतबलः सहसाऽभिपत्य
खड्गं प्रकोष्ठकुलिशेन निरस्य दूरात् ।
निर्भर्त्स्य रोषपरुषैर्वचनैर्नृशंसं
प्राणेश्वरीमभयदः प्रणयी कुदाँके ॥ ९५ ॥

आलोक्य पोतमिव सागरमज्जने द्रा-
गात्मेशमागतमचिन्तितमेव काले ।
आनन्दशोकविषमक्षरदश्रुपूरा[32]
वक्षःस्थलेऽस्य विपुले वनिता पपात ॥ ९६ ॥

आलिङ्ग्य गाढमनुसिक्तमिवामृतौघै-
राश्वास्य तां प्रणयवृष्टिनिभैर्वचोभिः ।
अन्वेषकेष्वपि समर्प्य पितृप्रयुक्ते-[33]
ष्वाहन्तुमप्रतिबलो रिपुमभ्ययासीत् ॥ ९७ ॥

ततस्तयोरप्रतिवार्यवीर्ययो-
रसिद्धयाघातलसत्स्फुलिङ्गयोः[34] ।
बभूव जन्यं प्रतिगर्जतोः क्रुधा
बलीयसोर्द्रोणिगुरुद्रुहोरिव ॥ ९८ ॥

---

32. °विषमक्षर°. 33. °क्तप्रयुक्ते°. 34. असिद्वता°.

गतिश्च्युता[35] सा गगने पुरा कृता
　मतिः[36] प्रनष्टा खलु मन्त्रसिद्धिजा ।
हतस्य पाषण्डपशोर[37]धर्मतो
　महीसुरेन्द्रस्य महः स्म वर्धते ॥ ९९ ॥

अथ सुचिरविमर्दाद्गाढमायस्तमूर्ते-
　रसिवरमपहृत्य ब्रह्मशत्रोः करान्तात् ।
भुवमनुविनिपात्य प्रौढमाहत्य पद्भ्यां
　झटिति रटत एव व्यालुनाद्[38]दुत्तमाङ्गम् ॥ १०० ॥

शीर्षच्छेद्या त्वमपि तदपि स्त्रीवधो मे न युक्तः
　पापे दूरं द्रुतमपसरेत्युज्झिता माधवेन ।
मत्कोपस्य प्रसरमचिराद् द्रक्ष्यसीत्येनमुक्त्वा
　पाषण्डी सा दिवमुदपतद् बाष्पपर्याकुलाक्षी ॥ १०१ ॥

अथ रजनिविरामे सिन्धुपारावगाहा-
　च्छुचिरहणमुपास्य प्रेयसीत्राणतुष्टः ।
नगरमविशदुच्चैर्नन्दनोद्वाहलीला-
　पिशुनमुरजघोष[39]र्व्याप्तदिक्चक्रवालम् ॥ १०२ ॥

ततस्तमवलोकिता भगवतीनियोगाद्रहो
　निवेश्य सुहृदा समं नगरदेवतामन्दिरे ।
उपानयत मालतीं तदभिवन्दनच्छद्मना
　करेणुमधिरोहिता नवविवाहवेषोज्ज्वलाम् ॥ १०३ ॥

---

35. गतिच्युता°.　36 मतिप्रनष्टा.　37. हतस्य...पाण्डवशो°.
38. व्यालुदाद्°.　39. मुरवघोष°.

कैश्चिन्मङ्गल्यगीतिस्तुतिमुखरमुखैः कैश्चिदानन्दनृत्त-
व्यग्रैः कैश्चिच्च तालव्यतिकरचतुरैः कैश्चिदातोद्यनिघ्नैः ।
वारस्त्रीणां कदम्बैर्मणिगणविलसद्भूषणोद्भासिताङ्गै-
र्हस्तिस्कन्धाधिरूढैरजनि निबिडिता राजधानी तदानीम् ॥१०४॥

अरुणकिरणमित्रैरञ्चितैरातपत्रै-
श्चलितकनकदण्डोड्डामरैश्चामरैश्च ।
सुरसरिदभिमृष्टैः केतुपट्टैश्च जुष्टा
कमलकुमुदहंसैर्दीर्घिकेवाद्युतद् द्यौः[40] ॥ १०५ ॥

गवाक्षमार्गेण निरीक्षमाणो
भूरिश्रियं भूरिवसोः कुमार्याः ।
सख्या समं विस्मयमाजगाम
गर्भेश्वरो[41] गर्भगृहे निलीनः ॥ १०६ ॥

अथ वेत्रपाणिनिवहेन दूरतो
विनिवेशितो विहितमण्डलो जनः ।
पुरदेवताभवन[42]गोपुराद्बहिः
करिणीकदम्बकविडम्बिताम्बुदः ॥ १०७ ॥

निषादितायाः करिराजवध्वाः
स्कन्धात् कुमारीमवरोप्य मन्दम् ।
लवङ्गिकादत्तकरावलम्बां
कामन्दकी देवगृहं निनाय ॥ १०८ ॥

40. °द्युतद्यौः.  41. गर्भेश्वरो.  42. परदेवता°.

भुजोरुनेत्रैः प्रसभं स्फुरद्भिः
स दक्षिणैर्दक्षजनाग्रगण्यः ।
आलिङ्गनाऽध्यासनदर्शनोत्कै-
रास्वादयतानन्दमभीष्टलाभम् ॥ १०९ ॥

आपाण्डुशोभामवसन्नगात्रा-
माशाक्षयादाधिभिरर्द्यमानाम् ।
आसेदुषीं हर्षविषादयोगा-
दालोक्य तामाकुलतां स भेजे ॥ ११० ॥

प्रकाश्य सा माधवमन्तरस्थं
तस्योपकण्ठे तरुणीं निवेश्य ।
तत्साध्वसप्रोद्धरणाय वाणीं
कामन्दकी कामदुघा बभाषे ॥ १११ ॥

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥ ११२ ॥

वचनानन्तरे तस्या मकरन्दोऽब्रवीदिमाम् ।
कुलकन्याविरुद्धोयमाचार इति शङ्किताम् ॥ ११३ ॥

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आसन्नवल्लभवरप्रणयप्रसाद-
मासाद्यनन्दतु चिराय फलन्तु कामाः ॥ ११४ ॥

इत्युक्तवचने तस्मिंस्तामवादील्लवङ्गिका ।
पितृधीलङ्घनत्रासप्रकटोत्कम्पशालिनीम् ॥ ११५ ॥

पितृवनमहीं निर्विण्णस्तां[43] पिशाचनिशाचर-
प्रमथनिबिडां बभ्रामैकः प्रकाशितसाहसः ।
पतितमवधीन्[44] पाषण्डाख्यं च कृष्णचतुर्दशी-
रजनिसमये तस्यालोकान् सखी मम कम्पिता ॥ ११६ ॥

श्रुत्वा तेषामिति बहुविधान् साहसिक्योपदेशान्
बाष्पोत्पीडस्थगितनयनद्योतितान्तःप्रसादा ।
बन्धुद्वेषप्रतिकृतिभिया बद्धरोमाञ्चकम्पा
लिम्पन्तीव प्रणयसुधया लिङ्गिनीमालिलिङ्गे ॥ ११७ ॥

तातप्रीतिप्रचयपिशुनैस्तामवस्थाप्य वाक्यैः
पाणौ तन्वी विकसितमुखीं पद्मवाभे गृहीत्वा ।
सख्युः सख्या अपि खलु तयोः सन्निधौ हर्षभाजा
वत्सेत्युक्त्वा पितृसवयसा माधवः संबभाषे ॥ ११८ ॥

एवं भूरिवसोरपत्यमथवा प्राणा बहिर्वर्तिनः
सामन्तोत्करशेखरीकृतपदद्वन्द्वस्य मन्त्रिप्रभोः ।
अस्माकं मनसो यदिष्टमथवा स्पष्टं समाधेः फलं
धात्रा चित्तभुवा मयाद्य भवते पित्राप्यसौ दीयते ॥ ११९ ॥

प्राजापत्यो विवाहोऽयं गान्धर्वेणोपबृंहितः ।
इति द्योतयितुं भूयो दम्पती तौ जगाद सा ॥ १२० ॥

43. त्वा.　　44. पतितमवधीः

प्रेयो[45] मित्रं बन्धुता वा समग्रा
सर्वे कामाः संपदो[46] जीवितं वा ।
स्त्रीणां भर्ता धर्मदाराश्च पुंसा-
मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ १२१ ॥

इत्युक्तौ तौ महाभागौ मालतीमाधवावुभौ
प्रीत्या जगृहतुस्तस्यास्तां वाणीं धर्मगर्भिणीम् ॥ १२२ ॥

पुनश्च माधवं प्रोचे पितृसब्रह्मचारिणी
बाष्पायमाणे बिभ्राणा वात्सल्यातिशयाद् दृशौ ॥ १२३ ॥

परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च तैश्च ।
तदिह सुवदनायां तात मत्तः परस्मात्
परिचयकरुणायाः सर्वथा मा विरंसीः ॥ १२४ ॥

इति तामनुशोचतीमवोच-
न्मकरन्दो मकरन्दवर्षि वाक्यम् ।
मिथुने त्रपया गृहीतमौने
मनसा तद्गुणितीमुपासमाने ॥ १२५ ॥

चरणाम्बुजयोस्तवाम्ब सेवा
फलिता नः प्रणतार्थकल्पवल्ली ।
तदिदं सचिवस्य तोकरत्नं
सुहृदे भूषणमर्पितं त्वयाद्य ॥ १२६ ॥

---

45. प्रभो. 46 Printed eds. of the मा. मा. read-शेवधिर्जी°.

उभयोरपि लोकयो: सुमित्र
सह धर्मं चरतोस्त्वयोपदिष्टम् ।
गृहिणीगृहिणोर्गृहानुकूल्या
दनयोर्हस्तगतो ननु त्रिवर्गः ॥ १२७ ॥

आढ्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदभरेति गुणोच्चलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ॥ १२८ ॥

इति ब्रुवाणं मकरन्दमूचे
कामन्दकी कार्यविशेषदक्षा ।
त्वं मालतीवेषधरोऽभ्युपेहि
कर्तुं विवाहं मदयन्तिकायाः ॥ १२९ ॥

चूडामणिप्रभृतिकं चरणाङ्गुलीय-
पर्यन्तमाभरणजातमिदं गृहाण ।
एतद् दुकूलयुगलं च शुचीत्र माला-
श्चन्द्रातपद्युतिसमद्युति लेपनं च ॥ १३० ॥

इत्युक्त्वा सा प्रतीहारीहस्तात् प्रोच्चमदापयत् ।
सोऽपि तत् सर्वमादाय मालतीभूमिकां दधौ ॥ १३१ ॥

मालतीद्वयमवेक्ष्य तेऽहसन्
माधवप्रभृतयः सविस्मयाः ।
सङ्कटं न सुहृदो व्यचिन्तयन्
सिद्धया नियमितस्य माधवः ॥ १३२ ॥

अथ माधवमभ्यधाच्च पूज्या
स भवान् पश्चिमतो विहारिकायाः ।
प्रियया सहितः प्रयातु धीमान्
महदुद्यानमपह्नुतार्कतापम् ॥ १३३ ॥

गाढोत्कण्ठकठोरकेरलवधूगण्डाच्छपाण्डुच्छदै-
स्ताम्बुलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः ।
कक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो-
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥१३४॥

तत्रैव तावत् स्थातव्यं त्वया दयितया सह
सखा ते यावदायाति गृहीत्वा मदयन्तिकाम् ॥ १३५ ॥

इत्यूचुषी सा मकरन्दमार्या
लवङ्गिकादत्तकरं गृहीत्वा ।
स्कन्धं समारोप्य करेणुकाया
विवाहलीलाविधये प्रतस्थे ॥ १३६ ॥

मालत्या सममथ माधवो मनीषी
संप्राप्तस्तदुपवनं विहारिकायाः ।
कान्तायाः करमयमग्रहीत् प्रवालं
भङ्गल्यं सुचिरमनोरथद्रुमस्य ॥ १३७ ॥

विलासिनीं व्रीडयतीं[48] विलोभयन्
विदग्धमुग्धैरवलोकनोदितैः ।
विहारिकोद्यानविहारमन्दिरे[49]
विभुः कृतार्थो विजहार माधवः ॥ १३८ ॥

---

47. तम्बोली. 48. व्रीलयतीं. 49. विहारिकोद्या न°.

आलोलैरलकैरपहृतसुरभीमाविस्फुरत्कुण्डला
माश्लिष्टामवगुण्ठनांशुकपटेनाध्यानचर्चारसाम् ।
आकल्पैर्नवरत्नकल्पघटितैरर्चिभिराच्छादिता
मानिन्ये पितुरालय भगवती मायामयी[50] मालतीम् ॥ १३९ ॥

मत्तैर्हस्तिभिरर्गिता हयकुलैः समन्ततो मर्दिता
पादातैः समधिष्ठिता सरभसैर्दावारिकैर्घट्टिता ।
द्वारे भूरिविसोमहोत्सवधुरातात्पर्यपर्याकुला
रेजे निष्क्रमणप्रवेशविधयो प्रापु पर प्राणिन ॥ १४० ॥

उद्गतमणितोरणं नवविचित्रचित्रोज्ज्वल
दुकूलपटपट्टिकारचितचारुचन्द्रोदयम्[51] ।
विशेषपरिभूषितं परिजनैः परिद्योतितं
विमानमिव वैबुधं निररचे वधूमन्दिरम् ॥ १४१ ॥

अथ नरपति [52] पद्मावत्याः प्रकाशितसौहृदो
निजविभवतो रत्नाकल्पैः प्रसाध्य च नन्दनम् ।[53]
करिकुलपते स्कन्धे चारोप्य वाद्यशतस्वनै-
र्बधिरितदिशा सद्य[54] सम्बन्धिनो गृहमानयत् ॥ १४२ ॥

वध्वा[55] सद्म प्रविशति वरे वानराभे मुनीन्द्रे
शेषु केचिन् तमतिचपलं भूपमेके निनिन्दु ।
अन्ये कन्यापितरमपरे भागधेयं तदीयं
नानावृत्तैर्नगरगृहिणा नन्दनोऽभूद्विवर्ण ॥ १४३ ॥

---

50 मायामया  51 पटि चारु°  52 नृपतिरिमा°
53 नन्दनम्  54 दिग्भरर्त्त बन्धिना Another emendation would be दिग्भ्यः  55 वध्वामद्म°

मधुरवचसि बाले माधवे मन्मथाभे
जयति गुणनिधाने श्रीमति ख्यातवंशे ।
परमपरमयोग्यं प्रोचता[६] या कवीतु
मतिरहह किमन्धा मालतीमान्यवानाम् ॥ १४४ ॥

मरणमपि वरं यत्क्लेपजं मानसार्तें[११]
नैतु परिणयलक्ष्मीर्वीदर्शैर्नित्यमल्पम् ।
किमपरमभियुंक्ते यस्तु सौम्यं कृतान्तः
"किसलयमिव धत्तां केवलं दग्धुरम' (?) ॥ १४५ ॥

हृदयमतिकठोरं मालतीमातुरित्थं
दुहितरमथ मग्नां या हि पश्यन्त्युदास्ते ।
ऋजुमतिरथवा सा किं वराकी विधत्तां
पितरि दुहितृरत्नं क्वाऽपि विक्रेतुकामे ॥ १४६ ॥

लवङ्गिकाद्या ललनाः प्रहासान्
यान् यानकुर्वन् मकरन्दतुष्टाः ।
तांस्ताश्चदात्मा तरलः स्मरार्तः
प्राबुद्ध सर्वान् प्रणयप्रयोगान् ॥ १४९ ॥

उपनीतमसौ पुरोधसा
मकरन्दस्य स पाणिमग्रहीत् ।
प्रचुराज्यसमिद्धपावक-
स्फुटधूमाकुलसाश्रुलोचनः ॥ १५० ॥

पुलकतिलकितप्ररूढकम्प-
श्रमजलशीकरकोरकायिताङ्गः ।
प्रकटितविकृतिः [61]स्मरेण वृद्धः
परिजहसे परितः प्रियासखीभिः ॥ १५१ ॥

परिणीय मनोरथप्रियां
परिवारेण लवङ्गिकादिभिः ।
निजवेश्म निनाय निर्वृतः
प्रतियातां मदयन्तिकादिभिः ॥ १५२ ॥

वधूवरौ वासगृहं निवेश्य
वधूं च धर्म्यैरनुशिष्य वाक्यैः ।
आमन्त्र्य जामातरमात्तपूजा
कामन्दकी स्वावसथं जगाम ॥ १५३ ॥

61. विकृति स्मरेण.

मधुरवचसि वाले माधवे मन्मथाभे
जयति गुणनिधाने श्रीमति ख्यातवंशे ।
वरमपरमयोग्यं प्रोद्यता[56] या वरीतुं
मतिरहह किमन्धा मालतीबान्धवानाम् ॥ १४४ ॥

मरणमपि वरं यद्रूपजं मानसार्ते-[57]
र्नतु परिणयलक्ष्मीरीदृशैर्नित्यशल्यम् ।
किमपरमभियुंक्ते यस्तु सौम्यं कृतान्तः
[58]किसलयमिव धत्तां केवल दग्धुकामः (?) ॥ १४५ ॥

हृदयमतिकठोरं मालतीमातुरित्थं
दुहितरमथ मग्नां या हि पश्यन्त्युदास्ते ।
ऋजुमतिरथवा सा किं वराकी विधत्तां
पितरि दुहितृरत्नं क्वाऽपि विक्रेतुकामे ॥ १४६ ॥

इत्थं सन्तप्तनाराचसवर्णाः कर्णरन्ध्रयोः[59] ।
शृण्वन् वाच• पुरस्त्रीणां जामाताऽभ्यन्तरं ययौ ॥ १४७ ॥

अधितिष्ठति लोकसत्क्रियार्थं[60]
नृपतौ भूरिवसौ च बाह्यकक्ष्याम् ।
प्रतिहारनिषिद्धबन्धुवर्गः
प्रययौ कौतुकमन्दिरं स मन्दः ॥ १४८ ॥

56. प्रोद्यतानां वरीत 57. मानसा(न्तो)र्न. 58. किसलय(मपि)मिव.
59 रन्ध्रयोःशृण्वन्. 60. लोकसत्क्रियायाम्°

लवङ्गिकाद्या ललनाः प्रहासान्
यान् याननुर्वन् मकरन्दनुन्नाः ।
तांस्ताञ्जडात्मा तरलः स्मरार्तैः
प्राबुद्ध सर्वान् प्रणयप्रयोगान् ॥ १४९ ॥

उपनीतमसौ पुरोधसा
मकरन्दस्य स पाणिमग्रहीत् ।
प्रचुराज्यसमिद्धपावक-
स्फुटधूमाकुलसाश्रुलोचनः ॥ १५० ॥

पुलकतिलकितप्ररूढकम्प-
श्रमजलशीकरकोरकायिताङ्गः ।
प्रकटितविकृतिः [61]स्मरेण वृद्धः
परिजहसे परितः प्रियासखीभिः ॥ १५१ ॥

परिणीय मनोरथप्रियां
परिवारेण लवङ्गिकादिभिः ।
निजवेश्म निनाय निर्वृतः
प्रतियातां मदयन्तिकादिभिः ॥ १५२ ॥

वधूवरौ वासगृहं निवेश्य
वधूं च धर्म्यैरनुशिष्य वाक्यैः ।
आमन्त्र्य जामातरमात्तपूजा
कामन्दकी स्वावसथं जगाम ॥ १५३ ॥

---

61. विकृति स्मरेण.

परिचुम्बितुमाननाम्बुजं तत्
 परिरब्धुं च दृढं पयोधरौ वा ।
तरसा निपतन् प्रविश्य पङ्कयां
 मकरन्देन महीतले निरासे ॥ १५४ ॥

कौमारे यदि कुलटामिमां[62] स्पृशेयं
 गच्छेयं गतिमधमां शपे गुरुभ्य. ।
इत्युक्त्वा स तु कुपितो विलक्षचेता
 निर्यात' प्रहृदितदुर्मुखो निकेतान् ॥ १५५ ॥

प्रसङ्गतोऽथ प्रियबुद्धरक्षिता[63]
 पतिद्विषं मत्सय[64] मालतीमिति ।
समानयत् तां मदयन्तिकां शनै-
 र्नृपाप्रहृष्टस्य विदस्य सन्निधिम् ॥ १५६ ॥

लवङ्गिकाऽऽह तां सुप्तां प्रबोधयितुमुद्यतां ।
चिरमुद्वेजिता भर्त्रा क्षण निद्रात्वसाविति ॥ १५७ ॥

तव प्रतीपं हि लवङ्गिके वच[65]
 तथैव गाढं मम कोपितोऽग्रजः ।
सहासिकायां[66] परभागया[67] स्त्रिया
 रतिर्भुजंग्येव रह. कुतो नृणाम् ॥ १५८ ॥

---

62 कुल्दा॰ 63 प्रसगतोऽथ बुद्ध॰. 64 मत्सम॰
65 लवगिके च तथैव 66 सहाऽस्ति का वा ॥ perhaps better than सहासिकाया. आसिका, sitting–Apte's Prac Sk Eng Dic
67. परभागया.

ननु प्रवादो नगरे विजृम्भते
स[68] मालतीमाधवयोर्द्वयोरिह[69] ।
इतीममाकर्ण्य विशङ्कितो गुरु-
र्वचोभिरेनामनुनोदरुन्तुदैः[70] ॥ १५९ ॥

मयापि दृष्टं ननु शङ्करालये
परस्परं प्रेम परार्घ्यमेतयोः ।
प्रयाणमन्यच्च मयाधुना स्मृतं
सुनिश्चितं कृष्णचतुर्दशीदिने ॥ १६० ॥

तस्मिन् दिने मम तरक्षुवशं गताया
प्राणप्रदात्तरि चिरप्रतिपन्नसंज्ञे ।
दिष्ट्याऽभिवर्धितवती दयितं सखी ते
तेनार्चिता च हृदयेन च जीवितेन ॥ १६१ ॥

इति तां ब्रुवती स्मराकुला-
मवतीर्णां स्वमनीषिते स्थले ।
स्मयमानमुखी लवङ्गिका
मकृतं प्रस्मरयन्त्यभाषत ॥ १६२ ॥

कोयं जनः कुवलयाक्षि कुतूहलं न-
स्तत्कथ्यतामिति लवङ्गिकयाऽनुबद्धा[71] ।
प्राह स्म सस्मितमुखी स्मर तं स्मराभं
नाहं क्षणेक्षितममुं कलयामि नाम्ना ॥ १६३ ॥

---

68. न. 69. द्वयोरिव. 70 मनुनोदरु°. 71. नुबद्ध:°

प्रशिथिलकचबन्धा प्रस्खलन्तीं पतन्तीं
प्रबलभयविहस्ता[72] भृत्यवर्गैर्निरस्ताम् ।
[73]मृदुमतिरनुपाधि प्राप्य यो मक्षु दत्वा
मृगपतिबलिमस्मै मृत्यवे मामुदस्थात्[74] ॥ १६४ ॥

इत्युक्त्वा विरता यालामानभापे लवङ्गिका ।
[75]मयाऽधुना स्मृत श्रीमान् मकरन्दो ह्यसावितिः ॥ १६५ ॥

प्रियाभिधानश्रवणामृतेन
प्रमोदमाना पुलकाचिताङ्गीम् ।
परामृशन्ती परिहासपूर्वं
लवङ्गिका ता ललित ललाप ॥ १६६ ॥

धय तथा नाम यथात्थ किं वदा-
न्यय[76] त्वकस्माद्विकल कथान्तरे ।
कदम्बगोलाकृतिमाश्रित कथ
विशुद्धमुग्ध कुलकन्यकाजन ॥ १६७ ॥

अनुप्रविष्टा किल बुद्धरक्षिता
जगाद ता जर्जरितत्रपा शनै ।
प्रकाशिता स्मो वयमञ्जसाऽनया
प्ररूढविश्रम्भकथाभिरास्महे ॥ १६८ ॥

---

72 °विहस्ताङ्कृय° 73 स्मृतिमृदुमति° 74 °मुदस्थाम् । ददस्थान् ।s थ तर्भावितण्यर्थं, उदतिष्ठिपद् इत्यथ । 75 ममाधुना° 76 °न्यहं

प्रेरिता प्रियसख्येत्थं प्रेमविश्रम्भगर्भितम् ।
मकरन्दार्पितां ताभ्यां स्मरार्ति स्वामवर्णयत् ॥ १६९ ॥

दयितावदनारविन्दवान्तं
मकरन्दो मकरन्दमालिहानः[77] ।
मधुलेह इवोन्मदिष्णुरन्चै-
र्मधुरिम्णा न स तृप्तिमाससाद ॥ १७० ॥

अथ तामुभे शपथपूर्वमूचतु-
र्यदि दैवतस्तव समीपमेत्य सः ।
तरसा महीप्यति करं स्मरातुरः
प्रतिपत्तिरत्र[78] तव का प्रकाश्यताम् ॥ १७१ ॥

निश्वस्य दीर्घमथ सा निभृतं जगाद[79]
का वाऽहमस्य खलु तस्य कलेवरस्य ।
तेनैव रूढगुणगौरवमात्मदेहं
प्रत्यर्प्य यत्निरुपयोगमपि प्रतीष्टम् ॥ १७२ ॥

इति तद्वचनं निशम्य मुदा
परिरभ्य ननन्दतुरिन्दुमुखीम् ।
स्मर वाचमिमामिति नीतिपरे
दृढतामपि निन्यतुरुत्तमुभे ॥ १७३ ॥

77. °मालिहानम् 78 °रम°. 79 जगाम.

तां चिरायितमिति प्रलपन्तीं
जापितः किमपि नाटितबोधः ।
न्यस्य दूरमवकुण्ठनमाराद्
अग्रहीन् करतले मकरन्दः ॥ १७४ ॥

मालतीमनभिवीक्ष्य मानिनी
माधवीव मलयानिलाहृता ।
साध्वसेन तरलत्रपावशा-
न्मन्दहासकुसुमं व्यचीकसत् ॥ १७५ ॥

गुरुजनपरिशङ्कातङ्कसङ्कोचिनीं तां
वरगुणपरिणाहान्वर्णयन्त्यौ[80] वचोभिः ।
स्मर सखि गिरमुक्तामद्य चेति ब्रुवाणे
निजमनसि वयस्ये स्थापयामासतुस्ते ॥ १७६ ॥

उद्वाहोत्सवसङ्कुलाऽखिलजनादुद्भ्रान्तदौवारिकात्
पक्षद्वारपथेन नन्दनगृहान्निर्गत्य कान्तां हरन् ।
प्रागिन्दोरुदयात् तमोभरमिलत्कालेयधूपोच्चयां
वीथीं प्राप विलासिपौरमदिरागोष्ठीभिरामोदिताम् ॥ १७७ ॥

अविरलतरदीपत्रासितध्वान्तमारा-[81]
दतिपटुपटहौघध्वानसंपूरिताशम् ।
अनिभृतगति कन्यारत्नहर्तुः पुरस्ताद्
अनिलनिभमनीकं रक्षिणामाविरासीत् ॥ १७८ ॥

---

80. परिणाहावर्ण°. 81. °त्रासित°.

मालतीवेषसंच्छन्नं हरन्तं मदयन्तिकाम् ।
विदित्वा मकरन्दं ते जजल्पुः पुरराक्षिण. ॥ १७९ ॥

मैथिलीमिव पुलस्त्यनन्दनो
नन्दनस्य भगिनीं हरत्यसौ ।
नन्दयोरिव (?) नरेन्द्रमन्त्रिणोः
संदधाति परमं पराभवम् ॥ १८० ॥

असौ पद्मालतिवेषधारी[82]
प्रतारयन नन्दनमार्यबुद्धिम्[83] ।
महात्मनो भूरिवसोः समक्ष-
महारयत् तामपि माधवेन ॥ १८१ ॥

वध्यतां वध्यतामेष च्छिद्यतां भिद्यतामिति ।
अभ्ययुञ्जत ते वीरं पञ्चास्यमिव कुञ्जरा ॥ १८२ ॥

चरितं चरितुं प्रियस्य सख्यु
कलहंसः प्रहितोऽथ माधवेन ।
महिला परिगृह्य संकुलेऽस्मिन्
सहसा माधवसन्निधिं निनाय ॥ १८३ ॥

मदयन्तिकां सहचरीद्वयान्वितां
पुरतो विलोक्य सहसैव मालती ।
अथ दिष्टिवृद्धिवचसाऽधिनोत् प्रियं
वकुलावलीविहितपारितोषिका ॥ १८४ ॥

82. Both the forms, मालता and मालति are noted in the Dic. Here मालति is used for the usual मालती, obviously for the sake of metre. 83 प्रतापन°

अथ निजसुहृदो निशम्य वृत्त
प्रियतमया प्रणयान्निवार्यमाण ।
सरभसमभिधात्र्य[84] तत्समीप
न्यविशत दोर्नल्धूतमार्गलोक ॥ १८५ ॥

कलकलमुपकर्ण्य कर्णतोद
किमिदमिति प्रतिहारमाशु पृष्ट्वा ।
तदुदितमकरन्दवृत्तवृत्त
परिकुपितो यत्नमादिशन्नरेन्द्र ॥ १८६ ॥

ततो विशदचन्द्रिकाभरपटीरपङ्काङ्किता
समुन्मिषिततारकाकुसुमकोरकालङ्कृताम् ।
दिदृक्षुरिव[85] तद्रण दिवमुपागतश्चन्द्रमा
समृद्धनिजमण्डल सपदि चन्द्रशाला नृप ॥ १८७ ॥

तत प्रवृत्ते तयोरतिभयङ्कर सङ्गर
पुरातनमुनी द्वयोर्बदरिकामिवाध्यूषुषो[86] ।
विमुक्तविविधायुधक्षयविषण्णडम्भोद्भव
सम बहुतरैर्बले समरकेलिकौतूहल ॥ १८८ ॥

पदाघातै काश्चित् कतिचिदद्यैर्वाहुहननै
प्रकोष्ठाग्रै काश्चित् कतिचन घनैरूरुघटनै ।
असङ्गादाच्छिन्नै कतिचन तदीयै प्रहरणै
भटमन्यान् सैन्यान् भयतरलता निन्यतुरुभौ ॥ १८९ ॥

---

84. °मभिधात्र्य°   85 दिदृक्षुरधिक रण   85A पुरातन
86 °मिवाध्यूषषो

प्रहरणममुचन् प्रपेतुर्धरण्यां दिशो दुद्रुवुः
क्षतमथमवमन् विलेपुः सशोकं मुमूर्छुश्चिरम् ।
शरणमुपययुस्तवास्मीति रेटुर्जहुर्जीवितं
प्रतिभटपुरुषा रुषा मोहिताभ्यामुमाभ्यां क्षताः ॥ १९० ॥

अथ नरपतिर्ज्योत्स्नाजालैरनर्गलनिर्गमै-
र्दिन इव[87] च निस्पष्टं दृष्ट्वा विचेष्टितमेतयोः ।
मुदितहृदयो[88] वीरश्लाघी निवार्य बलान्युभौ
निजसचिवयोरग्रे [89]द्वाःस्थैः स्वसन्निधिमानयत् ॥ १९१ ॥

सूर्याचन्द्रमसाविव द्युतिभरैर्दस्राविवाकारतः[90]
स्थित्या मेरुहिमालयाविव धिया दैत्यामरेज्याविव ।
दृष्ट्वा तावुपजातविस्मयरसः श्रुत्वाऽभिजात्यं ततः
प्रोचे मन्त्रिवरौ वरौ सुचरितौ लब्धौ भवद्भ्यामिति ॥१९२॥

वैलक्ष्यात्तौ पुनरपि निजौ मन्त्रिणौ चाऽप्रसन्नौ
ज्ञात्वा वाक्यैः प्रणयसरसैर्भूयसा सान्त्वयित्वा ।
सत्कृत्यैतावपि गुणगणे दर्शयन् पक्षपातं
प्रायादन्तःपुरमथ च तौ जग्मतुः स्वं निकेतम् ॥ १९३ ॥

अग्रहीद् गुणमस्माकमपराधे महत्यपि ।
अहो सौजन्यसर्वस्वसंकेतसदनं नृपः ॥ १९४ ॥

---

87. इव विस्पष्टं. 88. मुदितहृदयवीर°. 89 द्वारस्थस्सन्निधि°.
90. दस्रैरिवा°.

इति शिरसा बहुमन्यमानो
जगाद मित्र पथि दंवरातिः ।
प्रियासमक्ष हरणप्रवृत्ति
श्रोष्यामि सख्या मदयन्तिकायाः ॥ १९५ ॥

कथयति त्वयि नरिभवमालती-
परिचरोन्कटाक्षपराहतम्[11] ।
वदनपङ्कजमुच्छ्वसितश्रवा
स्तिमितदृष्टि सखी नमयिष्यति ॥ १९६ ॥

इति मनोरथमुद्धतमुद्वहन्
न खलु यावदसौ गृहमाविशन् ।
समरतन्त्रनियुक्तमना क्षण
किमपि तावदवारिथव मालती ॥ १९७ ॥

अन्तरेऽत्र विपरानुसारिणी
पूर्ववैरपरिहारकाङ्क्षया ।
भैरवीव पुरतो मृगीदृश
प्रत्यदृश्यत कपालकुण्डला ॥ १९८ ॥

मम गुरुरभिजघ्ने माधवेन त्वदर्थे
तदहमपि तवासैस्तस्य[12] कुर्वे निशापम् ।
उपचितदृढवैरा साऽहमेकस्य हेतो
रुभयमुरनिबद्धा गाढमुत्सादयामि ॥ १९९ ॥

---

91 वलाहक 92 तदहमिति वितासैस्तस्य

त्वद्वत्सलः क नु तपस्विजनस्य हन्ता
कन्याविटः पतिरसौ परिरक्षतु त्वाम् ।
श्येनावपातचकिता नववर्तिकेव[93]
किं चेष्टसे ननु चिरात् कवलीकृतासि ॥ २०० ॥

इति संतर्ज्य तां बालां बलादुत्क्षिप्य खेचरी ।
क्रन्दन्तीमार्यपुत्रेति श्रीपर्वतमुपानयत् ॥ २०१ ॥

कवलयितुं ततः शशिमुखीं धृतशूलवरा
प्रकटितदंष्ट्रया शशिकलामिव राहुतनुः ।
प्रसभमियेष सा [94]तदवलोक्य रुरोद भृशं
भगवति मामवेति दुहिता बत भूरिवसोः ॥ २०२ ॥

आक्रन्दनं भगवतीति मुहुर्मुहुस्तन्
कामंदकीति च निशम्य समीपसंस्था ।
सौदामिनी द्रुतमुपेत्य ददर्श बालां
बाष्पैः समं निपतितां वनदेवतानाम् ॥ २०३ ॥

निर्भर्त्स्य वत्सलतरा पिशिताशनां तां[95]
दृष्ट्योर्द्वयेन कुचयोश्च पयः क्षरन्ती ।
आश्वास्य वाग्भिरधिरोप्य निजाङ्कशय्यां
स्वीयं निनाय भवनं श्रुतपूर्ववृत्ता ॥ २०४ ॥

---

93. Vide जगद्धर's Com नववर्तिकेत्यपि पाठ
94. स तानवलोक्य.
95. पिशिताशनानां.

अथाविवेशोपवनं स माधवः
स्फुरद्भिरङ्गैः परिरम्भलम्पटैः ।
दिदृक्षमाणस्त्वरितेन चेतसा
जयश्रियं मूर्तिमतीमिव प्रियाम् ॥ २०५ ॥

भुजेन वामेन समं परिस्फुरत्
प्रकाशयन् [96]प्राणसमामपेयुषीम् ।
उपेयुषस्तस्य विहारदीर्घिका-
मदक्षिणं चक्षुरभूददक्षिणम् ॥ २०६ ॥

ततो गिरं मालति मालतीति
शुश्राव दूरान्मदयन्तिकायाः ।
लवङ्गिकायाश्च विषादभाजो-
रन्वेषयन्त्योरभितो वयस्याम् ॥ २०७ ॥

क्व नु मालती क्व नु कुलस्य भूषणं
क्व नु मे प्रिया क्व नु मदीयजीवितम् ।
क्व नु मद्विलोचनचकोरचन्द्रिका
क्व नु तद् गृहीतममृतं भवाम्बुधेः ॥ २०८ ॥

[97]अनुमितमनिमित्तैश्चेतसा शंकितं प्राक्
प्रकटमिव भवत्योरद्य वाचामशक्त्या[98] ।
व्यसनमुपगतं मे निष्प्रतीकारमेतद्
गलति न च कठोरं जीवितं हा हतोऽस्मि ॥ २०९ ॥

96 प्राणसमानवीयमीम्. 97 अनुमितिमनुमित्तै°. 98. वाचादशक्त्या

अयि सखे मकरन्द निरूप्यतां
प्रियसखी तव कुत्र गता भवेत्।
भगवतीभवने यदि युज्यते
न पुनरत्र गमिष्यति सैकिका ॥ २१० ॥

इत्थं सखीभिरनुयायिभिराप्तवर्गै-
रन्वेषयन्नुपवने भवने वने च।
नापश्यदुत्सुकमना दयितां यदाऽसौ
संमूर्छितो भुवि तदा न्यपतन्निराशः ॥ २११ ॥

संज्ञामवाप्य मकरन्दसुतप्रयत्ना-
दभ्युत्थितः पुनरवेक्ष्य जगत् स शून्यम्।
क्रीडां विहाय विललाप तथा विलासी
श्रुत्वा यथा दृषदपि द्रवतां प्रपेदे ॥ ॥ २१२ ॥

यः पूर्वं स्पृहणीयतामुपगतो भुक्तः समं कान्तया
तं देशं परिहृत्य हृन्नयनयोः सन्तापसन्तानदम्।
निर्विण्णो हृदये सुनिर्घृण इव त्यक्त्वा स्वबन्धून् सुहृद्-
द्रोणीशैलवनं सुपावनमगात् सख्या समं माधवः ॥ २१३ ॥

तत्रोन्मादवशां दशामुपगतस्तस्याः प्रवृत्तिं वने
पृच्छंस्तत्र मृगान् खगान् विटपिनो भृङ्गान् भुजङ्गानपि।
नष्टोऽयं परिहास इत्यपि वदन् कान्ते त्वमाप्ता मये-
त्यालिङ्गन् दयितां मनोरथमयीं प्राणान् कथंचिद् दधौ ॥ २१४ ॥

अथाविवेशोपवनं स माधवः
   स्फुरद्भिरङ्गैः परिरम्भलम्पटैः ।
दिदृक्षमाणस्त्वरितेन चेतसा
   जयश्रियं मूर्तिमतीमिव प्रियाम् ॥ २०५ ॥

भुजेन वामेन समं परिस्फुरत्
   प्रकाशयत् [96]प्राणसमामपेयुषीम् ।
उपेयुषस्तस्य विहारदीर्घिका-
   मङ्गिणं चक्षुरभूद्दक्षिणम् ॥ २०६ ॥

ततो गिर मालति मालतीति
   शुश्राव दूरान्मदयन्तिकायाः ।
लवङ्गिकायाश्च विपादभाजो-
   रन्वेषयन्त्योरभितो वयस्याम् ॥ २०७ ॥

क नु मालती क नु कुलस्य भूपणं
   क नु मे प्रिया क नु मदीयजीवितम् ।
क नु मद्विलोचनचकोरचन्द्रिका
   क नु तद् गृहीतममृतं भवाम्बुधे ॥ २०८ ॥

[97]अनुमितमनिमित्तैश्चेतसा शंकितं प्राक्
   प्रकटमिव भवत्योरद्य वाचामशक्त्या[98] ।
व्यसनमुपगतं मे निष्प्रतीकारमेतद्
   गलति न च कठोरं जीवितं हा हतोऽस्मि ॥ २०९

96 प्राणसमानवीयसीम् 97 अनुमितिमनुमित्तै° 98 वाचाद

पाथोदाना पथि परिचिते पावनैर्गन्धवाहै-
र्मन्दाकिन्या पयसि लुठितैर्मन्दमासेव्यमाना।
पद्मावत्याः परिसरमगान्माधवस्यात्र वृत्तं
श्रुत्वा प्रायाद् वनभुवमसौ यत्र मित्रानुयातः ॥ २२० ॥

दिवि स्थिताऽवेक्षत मूर्च्छितं स
भर्तुं च रुष्टं मकरन्दमार्त्यो।
अम्भोभिराश्वासयदभ्रियैस्त
न्यवर्तयत् तत्सुहृदं च मृत्योः ॥ २२१ ॥

अथ च बकुलमाला माधवाय प्रदाय
प्रियमपि विनिवेद्य प्रेयसीवृत्तमस्मै।
गगनमुदपतत् सा विद्यया नन्दयन्ती
रसमिव धरणिस्थं भानवीरश्मिमाला ॥ २२२ ॥

श्रीपर्वतं लघुतया गमितेन तेन
सञ्जीननौषधिरवेक्ष्यत जीवितेशा।
आवेगतस्तमवलोक्य पपात दूरा
दाप्लुत्य साऽपि हृदये हृदयेश्वरस्य ॥ २२३ ॥

परस्परं तौ परिरभ्य दुःखिता
वचिन्तितासादितदर्शनोत्सवौ।
विमुक्तकण्ठं चिरमश्रु वर्षता
विलीयमानाविव शोकवह्निना ॥ २२४ ॥

आर्तो भूरिवसुर्निशम्य तनयामत्यन्तमन्तं गता-
मर्थिभ्यो द्रविणं विधाय विपुलं क्षेत्रं तथा पात्रसात् ।
आलोलान् विषयानुदर्कविरसानालोच्य शोच्यानिमान्
आनघ्री नृपनन्दनावगणयन् प्रायादरण्यस्थलीम् ॥ २१५ ॥

अन्तःशल्यनिभान् अकल्पयद्धृदयस्त्यक्ष्यन्नसूनात्मनो
निश्चिन्वन् विधिना च वह्निपतने धर्मस्य निर्बाधताम् ।
संभेदे भृशपावने मधुमतीसिन्धोरयं भावुकं
ख्यातं प्राप सुवर्णबिन्दुमवनौ खण्डेन्दुचूडामणिम् ॥ २१६ ॥

विपदमथ विदित्वा देवरातः स्नुषाया-
स्तदुपहितमयस्थादीर्ध्यमप्यात्मसूनोः ।
विरतविषयसङ्गः सोऽपि निश्चित्य मर्तुं[100]
पशुपतिमुपतस्थे भूरिवस्वाश्रितं तम् ॥ २१७ ॥

लवङ्गिकाद्याभिरनुप्रयाता
कामन्दकी कामितदेहमोक्षा ।
वनं ययौ वीक्ष्य सुहृत्कुलं त-
न्निरीक्षितं निष्करुणेन धात्रा ॥ २१८ ॥

अथ मृगदृशा नुन्नाऽऽसन्नान् प्रबोधयितुं निजान्
प्रियमपि समानेतुं विद्याबलादपि जीवितम् ।
चिरपरिचितं चिह्नं संगृह्य केसरमालिकां
समचरत सा व्योम्ना सौदामिनी लघुगामिनी ॥ २१९ ॥

---

99. अर्थित्वाद्र°. 100 मृर्तिं.

पाथोदानां पथि परिचिते पावनैर्गन्धवाहै-
मन्दाकिन्याः पयसि लुठितैर्मन्दमासेव्यमाना ।
पश्चात्तस्याः परिसरमगान्माधवस्यात्र वृत्तं
श्रुत्वा प्रायाद् वनभुवमसौ यत्र मित्रानुयातः ॥ २२० ॥

दिवि स्थिताऽवेक्षत मूर्च्छितं तं
मर्तुं च सृष्टं मकरन्दमार्त्या ।
अम्भोभिराश्वासयदभ्रियैस्तं
न्यवर्तयत् तत्सुहृदं च मृत्योः ॥ २२१ ॥

अथ च बकुलमालां माधवाय प्रदाय
प्रियमपि विनिवेद्य प्रेयसीवृत्तमस्मै ।
गगनमुदपतन् सा विद्यया नन्दयन्ती
रसमिव धरणिस्थं भानवीरश्मिमाला ॥ २२२ ॥

श्रीपर्वतं लघुतया गमितेन तेन
संजीवनौषधिरवेक्ष्यत जीवितेशा ।
आवेगतस्तमवलोक्य पपात दूरा-
दाप्लुत्य साऽपि हृदये हृदयेश्वरस्य ॥ २२३ ॥

परस्परं तौ परिरभ्य दुःसिता-
वचिन्तितासादितदर्शनोत्सवौ ।
विमुक्तकण्ठं चिरमश्रु वर्षता
विलीयमानाविव शोकवह्निना ॥ २२४ ॥

अथ तावनुनीय लोकवृत्ते-
रितिहासैश्च दृढं प्रसाद्य सिद्धा ।
निजसिद्धिबलेन पूजनीयौ
भूशमानर्च विभूषणांशुकाद्यैः ॥ २२५ ॥

सह तौ निजदेशमानयन्ती
गगनस्थैव ददर्श भृत्यशौरैः ।
पितरावनयोः प्रवेष्टुकामौ
हुतमग्निं पुरत सुवर्णबिन्दोः ॥ २२६ ॥

प्रापय्य तौ सपदि चीवरिणीसकाशं
सौदामिनी द्रुतमुपेत्य सुवर्णबिन्दुम् ।
दिष्ट्यो[101]ऽभिवर्ध्य सचिवौ परिदीप्तमग्निं
बाह्यं क्षणेन निरवापयदान्तरं च ॥ २२७ ॥

शैलप्रपातात् पतितुं कृतोद्यमा
पवित्रतोयामथ पाटलावतीम् ।
प्रव्राजिकाद्या ददृशुर्दिवश्च्युतौ
चित्रां[102]शशाङ्काविव तौ वधूवरौ ॥ २२८ ॥

मालतीमाधवौ दृष्ट्वा पुनर्जाताविव स्त्रियः ।
प्रत्याशां[102A]श्वसुरैर्जिन्यः प्रात-सन्ध्यारुणाविव ॥ २२९ ॥

---

101 दिष्ट्याहिवर्द्ध 102 मखा°. Can it be for मघा°? But it would be unpoetic to use मघा in this connection, for, this lunar mansion contains five stars, whereas चित्रा contains one only Cf. हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव–रघु॰ I 46 102A. अजिन्यः.

उत्थाप्य पादपतितामुपगृह्य गाढ-
माघ्राय मूर्ध्नि चिरमस्रजलाविलाक्षी ।
प्रव्राजिकाऽऽशिषमयुङ्क्त शतं समानां
जीव त्वमिन्दुमुखि जीवय चात्मवन्धून् ॥ २३० ॥

महिलासहितः समेत्य हर्षा-
न्मकरन्देन सुहृत् समावभाषे ।
क नु सा चत योगिनी विनष्टा
कुलमभ्युद्धृतमापदो ययेति ॥ २३१ ॥

अस्मिन् क्षणे सकरुणैः
सचिववरौ देवरातभूरिवसू ।
सुतदुहितृविरहविधुरौ
विगतोऽन्तरमिति वनेचरैः शुशुचे ॥ २३२ ॥

वनचरवचनं तद् वज्रपातोपमेयं
सपदि निशमयन्तौ मालतीमाधवश्च ।
स्फुरितविषममोहौ भूतले संपतन्तौ
पुनरपि च सखीभिर्धारितौ व्याकुलाभिः ॥ २३३ ॥

मम खलु वचसा तौ जीवितौ मन्त्रिमुख्या-
विति गिरममृतौघां कालिकेवोद्गिरन्ती ।
दिवमनु ददृशे वैर्दीप्यमाना स्वभासा
विधुरितजनरक्षोद्योगिनी[103] योगिनी सा ॥ २३४ ॥

---

103. दक्षोद्यो°.

तत्प्रत्ययाद् विधुरितौ परिबोध्य वत्सौ
तद्दर्शनेन तपसि प्रयतोत्सुका[104] सा ।
कामन्दकी समुपसृत्य तया ववन्दे
सौदामिनी नमति वः परिचारिकेति ॥ २३५ ॥

अथ तां मालती दृष्ट्वा बभाषे घटिताञ्जलिः ।
हर्षगद्गदया वाचा मोदयन्ती सखीजनम् ॥ २३६ ॥

कपालकुण्डलाकोपदुर्जातजनितापदः ।
वयं सर्वेऽनया कृच्छ्रादार्ययाऽभ्युद्धृता इति ॥ २३७ ॥

युष्मत्परिचयस्नेहादार्यया रक्षिताऽस्म्यहम् ।
इति तद्वचसा शिष्यां लिङ्गिनी बहुमन्यत ॥ २३८ ॥

एह्येहि भूरिजनजीवितदानपुण्य-
संभारधारिणि चिरादसि हन्त दृष्टा ।
दत्तप्रमोदमपि नन्दय मे शरीर-
मालिङ्ग्य सौहृदनिधे विरम प्रणामात् ॥ २३९ ॥

वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।
यस्याः पुरापरिचयप्रतिरूढबीज-
मुद्भूतभूरिफलशालि विजृम्भते नः ॥ २४० ॥

---

104. तपसितोत्सुका सा.

उक्त्वेति संभ्रमवती स्वयमुत्थिता ता-
मुत्थाप्य पादविनतामुपगूह्य गाढम् ।
आघ्राय मूर्धनि हठादुपवेश्य पार्श्वे
पप्रच्छ साधु कुशलं चिरकालदृष्टाम् ॥ २४१ ॥

अत्युदारमनिमित्तमद्भुतं[105]
तद् विचिन्त्य सुकृतं तया कृतम् ।
आहतु: स्म मकरन्दमाधवौ
तत्प्रसादपरिलब्धजीवितौ ॥ २४२ ॥

अपि चिन्तामणिश्चिन्तापरिश्रममवेक्षते ।
इदं त्वकृतमन्येन कृतमाश्चर्यमार्यया ॥ २४३ ॥

[106]लवङ्गिका तां मदयन्तिका च
प्रणेमतु: प्रार्थिततत्प्रसादे ।
आशीर्भिरभ्यर्च्य तपस्विनी ते
मान्यश्रियं माधवमित्युवाच ॥ २४४ ॥

---

105 °मभूत, but this goes against the metre of the Stanza

106 This stz is very corrupt in the transcript, where it reads as follows—

लवङ्गिका ता मदयन्तिवापणे
यत्प्रार्थिततत्प्रसादे ।
आशीर्भिरभ्यर्च्य तपस्विनी ते
मान्याश्रिय माधवमित्युवाच ॥

अघोरघण्टः स कपालपाणि-
रायुष्मतायो निहतोऽपराद्धः ।
अन्तेवसन्त्या ननु तस्य वैरा-
दस्माकमुच्चैर्जनितेयमापत् ॥ २४५ ॥

आर्यस्य कुण्डिनपतेस्तव च प्रसोतु-
रग्रे च भूरिवसुनन्दनयोः करे मे ।
आयुष्मतः प्रहितमद्य कृतप्रसादं
पद्मावतीपरिवृढेन विलिख्य पत्रम् ॥ २४६ ॥

इत्युक्त्वा दर्शितं पत्रं योगिन्या समयज्ञया ।
गृहीत्वाऽवाचयत् प्रीत्या मकरन्दो महामतिः ॥ २४७ ॥

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्ववाये त्वयि
प्रत्यस्तव्यसने[107] महीयसि परं प्रीतोऽस्मि जामातरि ।
तेनेयं मदयन्तिकाऽपि भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताऽप्यस्माभिरुत्सृज्यते ॥ २४८ ॥

इति वाचिके स्फुटमनेन वाचिते
सकलस्य माधवजनस्य मानसम् ।
प्रससाद शङ्कितविरोधविच्युते-
र्मधुवैरिनाम्नि वचसेव कीर्तिते ॥ २४९ ॥

अवलोकिता तदनु बुद्धरक्षिता
कलहंसकश्च ननृतुः प्रमोदतः ।
मदयन्तिकादिभिरथाऽनुसन्दधे
मधुवैरिणः प्रकरणस्य चित्रता ॥ २५० ॥

---

107. प्रत्यस्त°.

सौदामिनी च तामूचे तदिद रामणीयकम् ।
तस्मिन् प्रकरणे गूढे चमत्कारवती यत ॥ २५१ ॥

अमात्ययो प्रीतियुजोर्मदग्रे
समग्रविद्याग्रहणावसाने ।
अपत्यसम्बन्धविधिप्रतिज्ञा
पुरातनी सम्प्रति पूरितेयम् ॥ २५२ ॥

माधवोऽथ निजगाद लिङ्गिनीं
श्रोतुमस्य कुतुक विजृम्भते ।
वस्तुक्तमिदमन्यथा यत
प्रोक्तमेतदपि चाऽन्यथाऽनया ॥ २५३ ॥

गुरुषु गुरुकुलेषु श्रावकावस्थया द्वौ
प्रणयनिगमचित्तौ तौ यमास्ता तदानीम् ।
अजनि सचिवयो स्वापत्यसम्बन्धसविद्
भवति परमभिक्षा तत्र सौदामिनीयम् ॥ २५४ ॥

पौरिका[108] परिण
यमाशीर्भिरतिसहितौ युवाम् । (?)
तत् तु सवरणमन्यथा मवे-
न्नन्दनस्य नृपतेश्च विक्रिया ॥ २५५ ॥

---

108 The first two lines are defective they read thus —
पौरिका परीन
ममाशीर्भिरतिसहितौ युवाम् ।

इति जिनव्रतिनीवचनेन ते
स्फुरितविस्मयहासलसन्मुखाः ।
अतिगभीरमबाधितमद्भुतं
मतिमतां चरितं बहु मेनिरे ॥ २५६ ॥

अथ सर्वतः कृतार्थे माधवमालन्दसागरे मग्नम् ।
सफलनिजयत्नमुदिता जगाद कामन्दकी वचनम् ॥ २५७ ॥

यत्प्रागेव मनोरथैर्वृतमभूत् कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशोऽपि मच्छिष्ययोः ।
निष्णातश्च समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
संप्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥ २५८ ॥

इत्यूचुषीं किमियदितः प्रियं स्या-
दित्यादिकैस्तामभिनन्द्य[109] वाक्यैः ।
तया समेतोऽनुगतः सखीभिः
पुरं प्रतस्थे ससुहृत्सबन्धुः ॥ २५९ ॥

निबद्धकेतुं निनदन्मृदङ्गां
पौराङ्गनाभिः परिवृष्टपुष्पाम् ।
पद्मावतीमेत्य समृद्धकामौ
वधूसमेतश्च गुरू ववन्दे ॥ २६० ॥

नन्दनेन मकरन्दबन्धुना
भूभृताऽपि च गुणाभिनन्दिना ।
मानितः श्वशुरयोर्महोत्सवं
मासमावहत मालतीपतिः ॥ २६१ ॥

---

109. दि.........यैः

माधवोऽथ मकरन्दसंयुतो
मालती च मदयन्तिकान्विता ।
प्राप्य कुण्डिनमखण्डितोत्सवं
प्रश्रयेण पितरौ प्रणेमतुः ॥ २६२ ॥

वधूसहायस्य वरस्य मङ्गले
पुरप्रवेशे पुरुहूततेजसः ।
प्रसन्नतां मन्त्रिवरे प्रकाशयन्
विदर्भराजो विदधे महोत्सवम् ॥ २६३ ॥

अभिमतधनराशिप्राप्तिसंजाततोष-
स्त्वनिमुरसमूहैराशिषा वर्ध्यमानः ।
अचिरमनुतिष्ठन् पञ्चयज्ञान् स्वगेहे
सममरमत स्वैरं प्रीणयन् बन्धुवर्गम् ॥ २६४ ॥

पद्मावतीं कुण्डिनतः कदाचित्
परापतन् पद्मपुरीं कदाचित् ।
नित्यं[110] सुखानां सह धर्मपत्न्या
कोटिं परामन्वभवत् कुमारः ॥ २६५ ॥

प्रकटितमिति पौरस्त्यमा बालिशानां
कुटिलमिविवृत्तं मालतीमाधवाख्यम् ।
दिशतु सहृदयेभ्यो दीर्घमानन्दमुद्रां
कृतिरियमृजुलघ्वी पूर्णसारस्वतस्य ॥ २६६ ॥

॥ इति ऋजुलघ्वी समाप्ता ॥

---

110 पन्थ

## INDEX I

# ऋजुलघ्वी

### अकारादि-वर्णानुक्रमेण श्लोकसूची

---

| | | |
|---|---|---|
| १२८ | श्लाघ्यान्वयेति नयनोत्सव० | वसन्तति० |
| २१२ | संज्ञामवाप्य मकरन्द० | ,, |
| ११ | सकलासु कलासु पारदृश्वा | मालभारिणी |
| २० | स देवरातस्य सुतो महात्मा | उपजातिः |
| ३९ | संमन्त्र्येत्थं मन्त्रिमुख्ये प्रयाते | शालिनी |
| २३ | सा लालयन्ती भुवनैकभूषाम् | उपजातिः |
| ९५ | सावेगमङ्गुलदल' सहसा | वसन्तति० |
| ७९ | सीत्कारैर्भैरवाणां दिशि दिशि | स्रग्धरा |
| ६७ | सुहृन्मोहमुग्धस्ततो माधवः | भुजङ्ग० |
| १९१ | सूर्याचन्द्रमसाविव द्युति० | शार्दूलवि० |
| २५१ | सौदामिनी च तामूचे | अनुष्टुभ् |
| १३ | स्वा दुहितर दुहितृमान् | गीतिः |
| १४६ | हृदयमतिकठोर मालती० | मालिनी |

## INDEX II

An alphabetical list of metres occurring in the Rjulaghvi (The Roman fig against each metre shows the number of stzs in that metre.)

| | | | |
|---|---|---|---|
| १ अनुष्टुभ्— | २९ | १७ भुजङ्गप्रयातम्— | १ |
| २ अपरवक्त्रम्— | १ | १८ मञ्जुभाषिणी— | ७ |
| ३ आर्या— | २ | १९ मन्दाक्रान्ता— | ८ |
| ४ इन्द्रवज्रा— | २ | २० मालभारिणी— | १८ |
| ५ उपजाति — | ३४ | २१ मालिनी— | २७ |
| ६ उपेन्द्रवज्रा— | ४ | २२ रथोद्धता— | १० |
| ७ गीति — | ४ | २३ वंशस्थम्— | १५ |
| ८ तोटकम्— | २ | २४ वसन्ततिलका | ३५ |
| ९ द्रुतविलम्बितम्— | ५ | २५ वियोगिनी— | ५ |
| १० नर्दटकम्— | १ | २६ शार्दूलविक्रीडितम्— | १८ |
| ११ नाराचम्— | २ | २७ शालिनी— | ३ |
| १२ पुष्पिताग्रा— | ७ | २८ शिखरिणी— | ३ |
| १३ पृथ्वी— | ४ | २९ स्रग्धरा— | २ |
| १४ प्रमाणिका— | १ | ३० स्वागता— | ३ |
| १५ प्रमिताक्षरा— | ३ | ३१ हरिणी— | ५ |
| १६ प्रहर्षिणी— | ३ | ३२ Unknown— | २ |

## INDEX III

An alphabetical list of stanzas from the Mālatī-mādhava quoted in the Rjulaghvī

| | | | | | |
|---|---|---|---|---|---|
| 1 अपि चिन्तामणिश्चिन्ता॰ | (Spoken by माध॰ & मक॰) | | | | |
| | | मा. मा. | X. 22— | ऋजु॰ | 243 |
| 2 अशस्त्रपूतनिर्व्याज॰ | (माध॰) | ,, | V. 12— | ,, | 80 |
| 3 एह्येहि भूरिजन॰ | (काम॰) | ,, | X. 20— | ,, | 239 |
| 4 कथयति त्वयि | (माध॰) | ,, | VIII. 11— | ,, | 196 |
| 5 कपालकुण्डलाकोप॰ | (माध॰&मक॰)[1] | ,, | X. 19— | ,, | 237 |
| 6 गाढोत्कण्ठकठोर॰ | (काम॰) | ,, | VI. 19— | ,, | 134 |
| 7 जगति जयिन | (मक॰) | ,, | I. 36— | ,, | 52 |
| 8 त्वं वत्सलेति | (मक॰) | ,, | VI. 14— | ,, | 114 |
| 9 त्वद्वत्सल क नु | (कपाल॰) | ,, | VIII. 8— | ,, | 200 |
| 10 परिणति रमणीया | (काम॰) | ,, | VI. 16— | ,, | 124 |
| 11 पुरश्चक्षूराग | (काम॰) | ,, | VI. 15— | , | 111 |
| 12 प्रेयो मित्र | (काम॰) | ,, | VI. 18— | ,, | 121 |
| 13 यत्प्रागेव मनोरथै॰ | (काम॰) | ,, | X 24— | ,, | 258 |
| 14 या कौमुदी नयनयो cd only | (मक॰) | ,, | I. 34— | ,, | 50 |
| 15 वन्या त्वमेव | (काम॰) | ,, | X. 21— | ,, | 249 |
| 16 वयं तथा नाम | (लव॰) | ,, | VII. 1— | ,, | 167 |
| 17 शाकुन्तलादीनिति॰ | (काम॰)[2] | ,, | III 3— | ,, | 45 |
| 18 श्लाघ्याना गुणिना | (काम॰) | ,, | X. 23— | ,, | 248 |
| 19 श्लाघ्यान्वयेति | (मक॰) | ,, | VI. 17— | ,, | 128 |

1 This is put in the mouth of मालती in the ऋजु॰

2 मा मा has मदुत्सङ्ग॰ in the 3rd l , it has been changed to तदुत्सङ्ग॰ in the ऋजु॰ as demanded by the Context

# NOTES

(MW—Sansk Eng Dic by Monier—Williams)

2 इतिवृत्त—story, plot

3 अग्रहार in I 1, land donated by the king to the Brahmanas for sustenance, in 12, excellent necklace, अग्रश्चासौ हारश्च

4 अन्वयाय—please correct this as अन्ववाय, family °विश्रुत—famous for Cf प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः । अमर० III 1 9 माधवकेशवाख्यौ—The names of माधव the father of देवरात, and केशव that of भूरिवसु are not found in the मा मा They are invented by पूर्णसरस्वती पुष्पदन्तौ—the sun and the moon Both the forms पुष्पदन्तौ and पुष्पवन्तौ are correct अमर० records only the latter, but the रामाश्रमी com on पुष्पवन्तौ notices the form पुष्पदन्तौ and quotes from हैम, 'पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ ।'

5 पितॄन् etc —a reference to the पञ्चमहायज्ञs which a Brahmin is enjoined to perform every day Cf अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ मनु० III 70 गृहं—with स्तम्भौ, a house, with तौ, the life of a householder गृहं चतुर्णां गति etc Cf यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते सर्वं आश्रमाः ॥ मनु० III 77

6 अन्वित° i e अर्थान्वित° i e यथार्थनामानम्

7 सोमत्विष्—having the splendour of the moon

16 नृपविद्यासु चतुष्टयासु—The use of the plu gramma tically wrong The plu seems to have been used for the sake of metre The emendation noted in the footnote solves this grammatical irregularity

15, 16 The names गुणवर्मा and पद्मवर्मा are not found in the मा मा. अपारीत् fr √पॄ satisfy, to please

18 सिद्ध्यष्टक° a reference to the eight supernatural powers viz अणिमा महिमा प्राप्ति प्राकाम्यं महिमा तथा । ईशिता वशिता चैव तथा कामावशायिता ॥ quoted in the रामाश्रमी टीका on अमर० I 1 36 Read सिद्ध्यष्ट° for सिध्यष्ट°

21 समा-समा a year The word is usually used in the plu But sometimes it can be used in other numbers also Cf रामाश्रमी टीका on अमर० I 4 20 (संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समा ।) बहुवचननिर्देशात् प्रायेणायं बहुवचनान्त इति ध्वनयति । क्वचिद् वचनान्तरमपि 'समां समां विजायते' (पा ५ 2 12) इति सूत्रात् ।

22 It was कामन्दकी and not the city of पद्मावती that was enjoying one उत्सव (the birth of मालती) after another (the birth of माधव) and hence पद्मावती has been emended to पद्मावतीम् In इहावनीनां, इह has after all to be taken as equal to 'this earth' So it has been emended to इला° as it gives the same sense more directly, and in the Devanagari Mss the interchange of ल and ह is quite likely

24 Emend °दक्षा to °दक्षा referring to कामन्दकी निन्ये- नी Atm to teach, to instruct The sense of the 4th line is not quite clear Perhaps it means—just as the moonlight (ज्योत्स्ना) causes a bright pearl to appear still more beautiful, so कामन्दकी s efforts to teach मालती, who was naturally very intelligent, the कामशास्त्र etc were productive of very great results We may perhaps read भासयन्ती for भावयन्ती

25 Acc to भवभूति, माधव was sent to पद्मावती to learn आन्वीक्षिकी Acc to कामन्दकनीतिसार II 11, आत्मविद्या is the same as आन्वीक्षिकी, (आन्वीक्षिक्यात्मविद्या स्यात् ईक्षणात् सुखदुःखयोः ।)

27 अचेतयन्त बभूवु इति शेष । For a similar description, see रघु० VII 5-11

30 दोलायितशेमुषी—The form दोलायित is as correct as दोलायित, though of rare occurrence It is denominative fr दोला, a swing MW records डोला as occurring in the Bala ramayana VII Act For the idea Cf आसीत् स दोलाचलचित्त- वृत्ति —Raghu 14 34 शेमुषी, intellect

31 निराकृतव्याजेन—निराकृत by भावे क्त is equal to निराकृति, निराकृतं = असम्मति (कर्मधा), refusal under some pretext Perhaps the emendation निराकृति व्याजेन would make the text

smoother and easier to understand तच्छलता प्रकाशयाम 'we shall explain the pretext used in giving the refusal', must be taken as the कविवाक्य, though it is the least expected here As noted in the foot note to this stanza there seems to be some lacuna here and only a discovery of another Ms would remove this irregularity

32 तव—This is said only to please कामदकी, 'मालती is as good as your own daughter' so that she may take the greatest interest in defeating the plan of the king Or emend तव to मम The Index of Metres records the metres of this and the following stanzas as Unknown But I must thank Dr Raghavan who has been successful in finding them out, as he says, 'after a great toil with them' According to his suggestion, उपचारभाषितमुते must go with an earlier verse which is lost except for that fragment, and अपि should be emended to अभि Thus the first half will read अभियाचते नृपसुतेन। तव (मम ) दुहितर स नन्दन। The 2nd half is alright The metre then would be उद्गता (a विषमवृत्त) of the 2nd variety acc to the छन्दोमञ्जरी of Gangā dasa (Kāśi Sk Series No 55, p 240) It is defined as प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्। यद्यथ भनजलगाः स्युरथो, सजसा जगौ च भवतीयमुद्गता॥ i e the *gana*—scheme is

स ज स ल, न स ज ग।

भ न ज ल ग, स ज स ज ग॥

and in illustration is quoted the stanza अथ वासवस्य वचनेन etc —किरात० XII 1 of भारवि

33 The metre of this stz would be सौरभक if we shift a single letter in the first line (न नृपो यथा instead of नृपो यथा न and drop another (त्व) in the 3rd The stanza as emended would read thus —न नृपो यथा विकृतिमेति, हृतिरपि यथा न सविद। नेतुमर्हसि तथा घटना, मतिशालिना किमिव नाम दुर्घटम्॥ The सौरभक is defined in केदारभट्ट s वृत्तरत्नाकर (K S S 55, P 119) as सरणत्रय व्रजति लक्ष्म, यदि सकलमुद्गतागतम्। नौ भगा

भवति सौरभक चरणे यदीह भवतस्तृतीयके ॥ १ ॥ The *gana*-scheme would be स ज स ल, न स ज ग। र न भ ग, स ज स ज ग॥ संविद् = प्रतिज्ञा see stz 12 above हति = हानि violation

36 न यथा प्रथते it should not, however, be known by people that it is done with my knowledge and sanction

37 विवृत by भावे क्त = विवरणं exposition नीते इति विवृते = नीते इति विवरणे ( कृते सति )

38 तिष्ठावहे are guided by your advice Cf सवाच्य कर्णादिषु तिष्ठते य । किरात॰ 3 14

39 निसृष्टार्थदूत्यं—a निसृष्टार्थदूत is a messenger who acts on his own responsibility, the full management of a business being entrusted to him Cf निसृष्टार्थो मितार्थश्च तथा शासनवाहक । सामर्थ्यात्पादतो हीनो दूतस्तु त्रिविधो मत ॥ कामंद 13 3

42 पृषत्क, an arrow

45 गुणित enumerated आमल्लकेन, read it as आयल्लकेन आयल्लकम् = उत्कंठा, longing see Śabdakalpadruma, and Kalpadrukośa I (GOS XLII) हल्लला स्यादृणरणस्तद्वदायल्लक पुन । P 429, stz 115

46 सदुरसङ्ग°—मा मा has मदुरसङ्ग° as कामन्दकी is the speaker there But here as the poet is narrating the story it is appropriately changed to सदुरसङ्ग°

48 तीर्थेन-तीर्थ, medium, means Cf मा मा I 15 6 सदनेन तीर्थेन घटत etc

54 प्रतियातना, a picture, a portrait

57 उपहृत, brought i e caused

58 हरिणदृशी, read °शी

60 नखरायुध, a tiger

63 अभियुक्त, attacked

64 कदंब collection, multitude दम्भोलि, a thunderbolt

65 उर पीठी broad chest पीठं, a seat, rarely पीठी—MW क्षतज, blood घुसृण, saffron

66 गाढप्रहर—Read गाढप्रहार

70 शशिरुचि the lustre or splendour of the moon i e ज्योत्स्ना

71. नन्दथुः, pleasure, delight, happiness.

72 मराली-female swan परिलुण्ठ् to steal, carry off.

77. चण्डातक—a pair of shorts, or tunic. Cf. कार्दमिकचेलचीरिकानियमितोच्चण्डचण्डातकम्—हर्षचरित II. para 7. These two references show that चण्डातक was a garment worn by males But Sanskrit lexicons would make it appear that चण्डातक was put on by women only. Cf. अर्धोरुक वरस्त्रीणां स्याच्चण्डातकमंशुकम् । अमर० II. 6. 119. and अर्धोरुकं चलनकं स्याच्चण्डातकमंशुकम् । समर्तृकाणां . ॥ कल्पद्रुकोष Vol I, p. 52, stz. 261, GOS No. XLII.

78 अमुना-माधवेन.

79 फेरव—a jackal. किटि (or किरि) a hog.

83. आकल्प, dress, decoration.

84 पितृवन, श्मशाने. करङ्क skull or a skeleton. कुणप, a corpse. दुष्ट, defiled, rendered unholy.

85 मघ्न, the sun

88. श्रवसी, the ears

90. उपयाचित, a present promised to a deity to propitiate her. स्वं जीवित i. e. मालती.

91. अलिकं, forehead.

92. चण्डमुण्डा, a form of दुर्गा, here=कराला.

94 वर्मन्, armour.

95 मुसल्य मुसलेन वध्यः. Cf. अमर III. 1. 5 . वध्यो मुसल्यो मुसलेन य ।

104 निष्ण, clever, adept.

105 उड्डामर, excellent

106 गर्भगृह, the sanctuary of the temple, the नगरदेवतामन्दिर in stz 103 above.

107. गोपुर, the ornamental gate-way of a temple.

109 उत्क, eager, desirous of

117 लिङ्गिनी i e कामन्दकी

118 पितृमवयसा i e कामन्दक्या सवयस्, a companion, friend

119. उत्कर, a multitude

120 उपबृंहित, supported

125 भणितो speech MW does not record this word but only भणिति

130 लेपन paste i e sandle paste

138 व्रीडयती—pre part fr the denominative of व्रीडा, bashfulness Or we may emend it to व्रीडवती for व्रीड = व्रीडा Kālidasa has used the word व्रीड as noted by तत्त्वबोधिनी (com on सिद्धान्तकौमुदी) in व्रीडमावहति मे स संप्रति The emended reading would also improve the alliteration

139 अवकुण्ठन—Both the forms अवकुण्ठन and अवगुण्ठन are correct For the former, see stz 174 above

142 आकल्प, ornament

145 The 4th l appears corrupt

148 कौतुकमन्दिर, the house in which a marriage is to take place

160 For प्रयाण°, read प्रमाण°

161 तरक्षु, a tiger

164 अनुपाधि अविद्यमान उपाधि (condition, reflection) यस्मिन् कर्मणि यथा स्यात्तथा, without a moment's hesitation मक्षु, quickly, immediately

166 आचित covered with

168 किल used in the sense of अलीक युद्ध॰ pretended to enter only after this speech of एकत्रिका Really speaking she was hiding herself somewhere there all the while

169 अर्पिता, given i e caused by

171 प्रतिपत्ति, course of action Cf वयस्य, का प्रतिपत्तिरत्र मालविकाग्निमित्र III 19 4 प्रति का—What would you do in this case?

176 Read °परिणाह for परिणाहान् परिणाह, extent 'परिणाहो विशालता'—अमर II 6 114

177 कालेय, black sandal पीती wood

180 नंदया (?) There must be some word here meaning राम and लक्ष्मण

184 दिष्ट्यावृद्धिवचसा—Cf दिष्ट्या वर्धसे मद्यन्तिकालाभेन—मा मा VIII 6 7

187 पटीर, sandal wood

188 पुरातनमुनान्द्यौ —This seems to be a reference to नर and नारायण, the two ancient sages having their hermitage at Badarikedara Cf Mbh III 145 23 (Critical Ed)

189 असङ्गात् ind, unobstructedly, easily क्षतभर्व, blood सैन्य, a guard, a sentinel, a soldier

192 दस्रौ, the two अश्विन्s दैत्यामरेज्यौ i e शुक्र and बृहस्पति इज्य, a teacher

216 अकल्यहृदय —(अकल्य unwell) sick at heart Cf अमर III 3 159 कल्यौ सज्जनिरामयौ

217 तदुपहित°—तया विपदा उपहित उपहित, preceded by or connected with, i e caused or occasioned by

220 पाथोद, a cloud 221 °वैम्नत, read वैक्षत

222 विद्यया नन्दयन्ती—*Emend this to* विद्यया त नयन्ती Cf मा मा इति समाधवा निष्क्रान्ता IX 51 1 230 °मयुक्त read मयुक्त

237 In the मा मा this stz is uttered by माधव and मकरन्द, here however it is put in the mouth of मालती

245 अन्तेवासिन्या i e कपालकुण्डलया

246 परिवृढ, lord Cf अमर III. 1 11 प्रभु परिवृढोऽधिप ।

249 वाचिक a message

250 अनुलदधे (pass) was inquired about मधुवैरिण—माधवस्य We must read the following remark of कामन्दकी before 250$^{cd}$ to grasp its full significance —कामन्दकी—अस्ति वा कुतश्चिदेवभूतमद्भुत विचित्ररमणीयोज्ज्वल प्रकरणम्। मा मा X. 23 14-15 This remark, which must have roused the curiosity of मदयन्तिका and others is taken for granted by our poet

251-252 Cf मा मा X 23 16 17 इदमत्र रमणीयतरं यदमात्ययार्भूरिवसुदेवरातयाश्चिरात्पूर्णोऽयमितरेतरापत्यसम्बन्धा मा मनोरथ।

253$^{cd}$ Cf मा मा X. 23 19 20 माधवमकरन्दा—भगवति अन्यथा वस्तुवृत्तमन्यथा वचनमायाया ।

256 चिरव्रतिनी—(चिर =वृद्ध) कामन्दकी Cf अमर I 1 13, मारचिह्नाकचिरजिन ।

## ERRATA

| Page | For | Read |
|---|---|---|
| 1 1 14 | तत्रान्वयाय | तत्रान्ववाय |
| 4 1 11 | सिध्यष्ट | सिध्याष्ट |
| 11 1 21 | हरिणदर्शी | हरिणदर्शीं |
| 13 1 5 | द्रतगति | द्रुतगति |
| 13 1 13 | प्रहर | प्रहार |
| 31 1 8 | प्रयाण | प्रमाण |
| 43 1 6 | स्थिताऽवेक्षत | स्थिताऽवैक्षत |
| 43 1 13 | नन्दयन्ती | त नयन्ती |
| 45 1 4 | मयुक्त | मयुक्त |
| 48 1 3 | रायुष्मतायो | रायुष्मता यो |
| 55 1 6 | ? | उद्धृता 2nd |
| 57 1 26 | ? | सौरभक |
| 63 1 15 | VI 15—„ 111 | VI 15—„ 112 |
| 63 1 19 | X 21—„ 249 | X 21—„ 240 |
| 63 1 21 | III 3—„ 45 | III 3—„ 46 |